# VEDANTAPARIBHASHA

A treatise on the Vedanta Philosophy by
Dharma rajaa dhwarindra

EDITED PUBLISHED BY

*PANDIT JIBANANDA VIDYASAGARA B. A.*

*Superintendent, Free Sanskrit College.*



CALCUTTA

*Printed at the Beadon Press*

1875.

*To be had from Pandit Jibananda Vidyasagara B. A.
Superintendent, Free Sanskrit College Calcutta.*

पण्डित-कुल-तिलकपूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत

प्रकाशित-पुस्तकान्येतानि

| | | | |
|---|---|---|---|
| १ आशुबोध व्याकरणम् | ३।० | २६ वाचस्पत्यम् (संस्कृतबृहदभिधान) | १०० |
| २ धातुरूपादर्शः | २ | २७ कादम्बरी—सटीक | ४ |
| ३ शब्दस्तोम—महानिधि—संस्कृत अभिधान | १० | २८ राजप्रशस्ति | ॥/ |
| ४ सिद्धान्तकौमुदी-सरलाटीकासहिता | ११ | २९ अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ५ सिद्धान्तबिन्दुसार (वेदान्त) | ॥० | ३० सर्व्वदर्शनसंग्रह | १ |
| ६ तुलादानादि पद्धति(वङ्गाक्षरैः) | ४ | ३१ भामिनीविलास-सटीक | १ |
| ७ गयाश्राद्धादि पद्धति | १ | ३२ हितोपदेश—सटीक | १ |
| ८ शब्दार्थ रत्न | ॥।० | ३३ भाषापरिच्छेद मुक्तावलीसहित | १ |
| ९ वाक्यमञ्जरी (वङ्गाक्षरैः) | ।० | ३४ बहुविवाहवाद | ।० |
| १० छन्दोमञ्जरी तथा वृत्तरत्नाकर-सटीक | ॥ | ३५ दशकुमारचरित सटीक | १॥० |
| ११ वेणीसंहार नाटक—सटीक | १ | ३६ परिभाषेन्दुशेखर | ॥।० |
| १२ मुद्राराक्षस नाटक-सटीक | १॥० | ३७ कविकल्पद्रुम (वोपदेवकृत) | ॥० |
| १३ रत्नावली | ।।।० | ३८ चक्रदत्त (वैद्यक) | १॥० |
| १४ मालविकाग्निमित्र-सटीक | १॥० | ३९ उणादिसूत्र-सटीक | २ |
| १५ धनञ्जय विजय-सटीक | ।० | ४० मेदिनी कोष | १ |
| १६ महावीरचरित | १॥० | ४१ पञ्चतन्त्रम् श्रीविष्णु-शर्म्म-सङ्कलितम् | २॥० |
| १७ साङ्ख्यतत्व कौमुदी-सटीक | २ | ४२ विद्वन्मोदतरङ्गिणी(चम्पूकाव्य) | ॥ |
| १८ वैयाकरणभूषणसार | ॥।० | ४३ माधवचम्पू | ।/ |
| १९ लीलावती | ॥।० | ४४ तर्कसंग्रह इंराजीअनुवाद सहित | ॥० |
| २० बीजगणित | १ | ४५ प्रसन्नराघव नाटक श्रीजयदेव कवि रचित | १ |
| २१ शिशुपालवध-सटीक(माघ) | ४ | ४६ विवेक चूडामणि श्रीमत् शङ्कराचार्य्यविरचित | ।/ |
| २२ किरातार्जुनीय-सटीक(भारवि) | २॥ | | |
| २३ कुमारसम्भव-पूर्वखण्डसटीक | ॥।० | | |
| २४ कुमारसम्भव-उत्तरखण्ड | ॥० | | |
| २५ अष्टकम् पाणिनीयम् | ॥।० | | |

# वेदान्तपरिभाषा ।

---

## प्रथमः परिच्छेदः ।

यदविद्याविलासेन भूतभौतिकसृष्टयः ।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥
यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः ।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥
श्रीमद्वेङ्कटनाथाख्यान् वेलङ्गुडिनिवासिनः ।
जगद्गुरूनहं वन्दे सर्व्वतन्त्रप्रवर्त्तकान् ॥
ब्रह्मबोधाय मन्दानां वेदान्तार्थावलम्बिनी ।
धर्म्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥

इह खलु धर्म्मार्थकाममोक्षेषु चतुर्व्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः "न स पुनरावर्त्तते" इत्यादि श्रुत्या तस्यैव नित्यत्वावगमात् इतरेषां त्रयाणां प्रत्यक्षेण "तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुत्या चानित्यत्वावगमाच्च । स च ब्रह्मज्ञानादिति ब्रह्म तज्ज्ञानं तत्प्रमाणञ्च सप्रपञ्चं निरूप्यते ।

तत्र प्रमायाः करणं प्रमाणम् । तत्र स्मृतिव्यावृत्तं प्रमात्वमनधिगताबाधितार्थविषयज्ञानत्वं स्मृतिसाधारणन्तु अबाधितार्थविषयज्ञानत्वम् । नीरूपस्यापि कालस्य इन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्व्वपूर्व्वज्ञानाविषयतत्तत्क्षणविशेषविषयकत्वेन न तत्राव्याप्तिः । किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः किन्तु याव-

यावद्घटस्फुरणं तावद्घटाकारान्तःकरणवृत्तिरेकैव न तु नाना वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्य्यन्तस्थायित्वाभ्युपगमात् तथाच तत्प्रतिफलित चैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालीनमेकमेवेति नाव्याप्ति कुत्रापि ॥

ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात् कथं तज्ज्ञानं प्रमा । उच्यते । ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत् इति श्रुतेः । न तु संसारदशायां बाधः यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति श्रुतेः । तथा चाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति घटादिप्रमायां नाव्याप्तिः । तदुक्तम् । देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयादिति । आ आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्य्यन्तमित्यर्थः । *लौकिकमिति घटादिज्ञानमित्यर्थः ।

तानि च प्रमाणानि षट् । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात् । तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम् । प्रत्यक्षप्रमा चात्र चैतन्यमेव यत्साक्षादपरोक्षाद्ब्रह्म इति श्रुतेः । अपरोक्षादित्यस्य अपरोक्षमित्यर्थः ।

ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति । उच्यते । चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते । ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः तदुक्तं विवरणे अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति ।

ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथं इत्थं न तावदन्तःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात् सादित्वञ्च तन्मनोऽसृजत इति श्रुतेः । वृत्तिरूपज्ञानस्य मनोधर्म्मत्वे च कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्व्वं मन एवेति श्रुतिः प्रमाणम् । धीशब्देन वृत्तिरूपज्ञानाभिधानात् अतएव कामादेरपि मनोधर्मत्वम् ।

ननु कामादेरन्तःकरणधर्म्मत्वे अहमिच्छामि अहं बिभेमि अहं

जानामीत्याद्यनुभवः आत्मधर्मत्वमवगाहमानः कथमुपपद्यते। उच्यते। अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् यथा अयो दहतीति व्यवहारः तथा सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादहं सुखी अहं दुःखीत्यादिव्यवहारः।

ननु अन्तःकरणस्य इन्द्रियतया अतीन्द्रियत्वात् कथं प्रत्यक्षविषयतेति। उच्यते। न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। मनःषष्ठानीन्द्रियाणीति भगवद्गीतावचनं प्रमाणमितिचेत् न अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात्। नहि इन्द्रियगतसंख्यापूरणमिन्द्रियेणैव इति नियमः यजमानपञ्चमा इडां भक्षयन्तीत्यत्र ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजापि यजमानेन वेदानध्यापयामास महाभारत पञ्चमानित्यादौ च वेदगतपञ्चत्वसंख्यायाः अवेदेनापि भारतेन पूरणदर्शनात् इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च। नचैवं मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्त्वं न स्यादिन्द्रियाजन्यत्वादिति वाच्यं नहि इन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वं अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः ईश्वर ज्ञानस्याजन्यस्य साक्षात्त्वानापत्तेश्च।

सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत् किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किम्वा विषयगतस्य। आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः। तथाहि त्रिविधं चैतन्यं विषयचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यञ्चेति। तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यं अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यं अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। सएव परिणामो वृत्तिरित्युच्यते। अनुमित्यादिस्थले तु अन्तःकरणस्य न वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात् तथाचायं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहि

रेकत्र देशे समवस्थानात् तदुभयावच्छिन्नं चैतन्यमेकमेव विभाजकयो-र्घ्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थितत्वेन भेदाजनकत्वात् । अत-एव मठान्तर्व्वर्त्तिघटावच्छिन्नाकाशो न मठाकाशाद्भिद्यते । तथा चायं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्न चैतन्यात्तद्वृत्त्यवच्छिन्नचैतन्यस्याभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्य-क्षत्वं सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेश-स्थितोपाधिद्वयावच्छिन्नत्वान्नियमेनाहं सुखीत्यादिज्ञानस्य सुखाद्यंशे प्रत्यक्षत्वम् ।

नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेन्न तत्र स्मर्य्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्व्वर्त्तमान-तया उपाध्योर्व्यवच्छिन्नकालत्वेन तत्तदवच्छिन्नचैतन्ययोर्भेदात् उपाध्यो-रेकदेशस्थत्वे सति एककालीनत्वस्य उपाधेयाभेदप्रयोजकत्वात् । यदि च एकदेशस्थत्वमात्रमुपाधेयाभेदप्रयोजकं तदा अहं पूर्व्वं सुखी-त्यादिस्मृतावतिव्याप्तिवारणाय वर्त्तमानत्वं विषयविशेषणं देयम् ।

नन्वेवमपि स्वकीयधर्म्माधर्म्मौ वर्त्तमानौ यदा शब्दादिना ज्ञायेते तदा तादृशशाब्दज्ञानादावतिव्याप्तिः तत्र धर्म्माद्यवच्छिन्नतद्वृत्त्यवच्छिन्न चैतन्ययोरेकत्वात् इति चेन्न योग्यत्वस्यापि विषयविशेषणत्वात् । अन्तःकरणधर्म्मत्वाविशेषेऽपि किञ्चिद्योग्यं किञ्चिदयोग्यं इत्यत्र फल बलकल्प्यः स्वभाव एव शरणम् । अन्यथा न्यायमतेऽप्यात्मधर्म्मत्वात् सुखादिवद्धर्म्मादेः प्रत्यक्षत्वापत्तिर्दुर्व्वारा ।

न चैवमपि वर्त्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वापत्तिः स्यादिति वाच्यम् । इष्टत्वात् । दशमस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्षज्ञानाभ्युपगमात् । अतएव पर्व्वतो वह्निमान् इत्यादिज्ञानमपि वह्न्यंशे परोक्षं पर्व्वतांशेऽपरोक्षं पर्व्वता-द्यवच्छिन्नचैतन्यस्य वहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्याभेदात् । वह्न्यंशे तु अन्तःकरणवृत्तिनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य अन्तः-करणवृत्त्यवच्छिन्नचैतन्यस्य च परस्परं भेदात् । तथा चानुभवः पर्व्वतं

पश्यामि वह्निमनुमिनोमीति । न्यायमते तु पर्व्वतमनुमिनोमीत्यनु-व्यवसायापत्तिः । असन्निकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम् । सुरभि चन्दनमित्यादि ज्ञानमपि चन्दनखण्डांशेऽपरोक्षं सौरभांशे च परोक्षं सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटि-तस्य निरुक्तलक्षणस्याभावात् ।

ननु चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्ज्जातित्वं न स्यादिति वाच्यम् । इष्टत्वात् । जातित्वोपाधित्वपरिभाषायाः सकल प्रमाणागोचरत्वेनाप्रामाणिकत्वात् । घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानं न तु तस्य जातित्वेऽपि जातित्वरूपसाध्यस्या प्रसिद्धौ तत्साध्यकानुमानस्याप्यनवकाशात् समवायासिद्धा ब्रह्मभिन्न निखिलप्रपञ्चस्यानित्यतया च नित्यसमवेतत्वघटितजातित्वस्य घटत्वा-दावसिद्धेश्च । एवमेवोपाधित्वं निरसनीयम् । पर्व्वतोवह्निमानित्यादौ च पर्व्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदक भेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये न विरोधः । तथाच तत्त-दिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यव-च्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् । घटादेर्व्विषयस्य प्रत्यक्षत्वन्तु प्रमातृभिन्नत्वम् ।

ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः अहमिदं पश्या-मीति भेदानुभवविरोधादिति चेत् । उच्यते । प्रमात्रभेदो नाम न तावदैक्यं किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः । तथाहि घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता अधिष्ठान सत्तातिरिक्तारोपितसत्ताया अनङ्गीकारात् । विषयचैतन्यञ्च पूर्व्वोक्त प्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धम् घटादेरपरोक्षत्वम् । अनु-मित्यादिस्थलेऽन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिन्न चैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः ।

नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः । धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्तानतिरेकादिति चेन्न योग्यत्वस्यापि विषयविशेषणत्वात् ।

नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः रूपाद्यवच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य च एकतया रूपाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदेन परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादिति चेन्न तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् । रूपाकारवृत्तिदशायां परिमाणाकारवृत्त्यभावेन परिमाणाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ।

नन्वेवं वृत्तावव्याप्तिः अनवस्थाभया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेन्न अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापि सम्भवात् । एवञ्चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमेन उक्तलक्षणस्य तत्रापि सत्त्वान्नाव्याप्तिः ।

न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोध इति वाच्यम् नहि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किन्तु इन्द्रियानुमानादिप्रमाणमन्तरेण साक्षिविषयत्वम् । अतएवाहङ्कारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता । अतएव प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता । तथाचान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः ।

तदयं निर्गलितार्थः । स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् । तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः ।

सा च वृत्तिश्चतुर्विधा संशयो गर्वः स्मरणमिति। एवं वृत्तिभेदेन एकमप्यन्तःकरणं मन इति बुद्धिरित्यहङ्कार इति चित्तमिति चाख्यायते। तदुक्तम्। मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्॥ संशयोनिश्चयोगर्वः स्मरणं विषया इमे॥

तच्च प्रत्यक्षं द्विविधं सविकल्पकनिर्विकल्पकभेदात्। तत्र सविकल्पकं वैशिष्ट्यावगाहि ज्ञानं यथा घटमहं जानामीत्यादि ज्ञानम् निर्विकल्पकन्तु संसर्गानवगाहि ज्ञानम्। यथा सोऽयं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम्।

ननु शाब्दमिदं ज्ञानं न प्रत्यक्षं इन्द्रियाजन्यत्वादिति चेन्न नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं दूषितत्वात् किन्तु योग्यवर्त्तमानविषयत्वे सति प्रमातृचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथा च सोऽयं देवदत्त इतिवाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभिन्नतया सोऽयं देवदत्त इतिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्। एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि। तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्। उच्यते। वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रं अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयतापत्तेः किन्तु तात्पर्य्यविषयत्वम्। प्रकृते च सदेव सौम्येदमग्रआसीत् इत्युपक्रम्य तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्य्यमवसितमिति कथं तात्पर्य्याविषयं संसर्गमवबोधयेत्।

इदमेव तत्त्वमसीत्यादिवाक्यानामखण्डार्थत्वं यत्संसर्गानवगाहि यथार्थज्ञानजनकत्वमिति। तदुक्तम्। संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्। उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता। प्रातिपदिकार्थमात्रपरत्वं वा अखण्डार्थत्वमिति चतुर्थपादार्थः।

तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षीश्वरसाक्षी चेति। तत्र

जीवो नाम अन्तःकरणावच्छिन्नं चैतन्यं तत्साक्षी तु अन्तःकरणोपहितं चैतन्यम् । अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः । विशेषणञ्च कार्य्यान्वयि उपाधिश्च कार्य्यानन्वयी व्यावर्त्तको वर्त्तमानश्च रूपविशिष्टोघटोऽनित्यइत्यत्र रूपं विशेषणं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः । अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते । प्रकृते चान्तःकरणस्य जड़तया विषयभासकत्वायोगेन विषयभासकचैतन्योपाधित्वम् अयञ्च जीवसाक्षी प्रत्यात्मं नाना एकत्वे तु चैत्रावगते मैत्रस्याप्यनुसन्धानप्रसङ्गः ।

ईश्वरसाक्षी तु मायोपहितं चैतन्यं तच्चैकं तदुपाधिभूतमायाया एकत्वात् इन्द्रो मायाभिः पुरुरूपईयतइत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तिः । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः इत्यादिश्रुतिषु एकवचनेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहितं चैतन्यमीश्वरसाक्षी तच्चानादि तदुपाधेर्मायाया अनादित्वात् । मायावच्छिन्नं चैतन्यञ्च परमेश्वरः मायाया विशेषणत्वे ईश्वरत्वं उपाधित्वे साक्षित्वं इतीश्वरत्वसाक्षित्वयोर्भेदः नतु धर्म्मिणोरीश्वरतत्साक्षिणोः ।

स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते ।

नन्वीश्वरसाक्षिणोरनादित्वे तदैक्षत बहु स्यां प्रजायेय इत्यादौ सृष्टिपूर्व्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते । उच्यते । यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्म्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषाः इदमिदानीं स्रष्टव्यमिदमिदा-

सौं पालयितव्यमिदमिदानीं संहर्त्तव्यमित्याद्याकारा जायन्ते तासाञ्च वृत्तीनां सादित्वात् तत्प्रतिबिम्बितचैतन्यमपि सादीत्युच्यते ।

एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यं प्रत्यक्षत्वञ्च ज्ञेयगतं ज्ञप्तिगतञ्च निरूपितम् । तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव पर्व्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात् तत्तद्विषयांशप्रत्यक्षत्वन्तु पूर्व्वोक्तमेव तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः प्रमाप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्व्वचने तस्यापि लक्ष्यत्वात् । यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्व्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं देयं शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वात् ।

ननु विसम्वादिप्रवृत्त्या भ्रान्तिज्ञानस्य विषयसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसम्भवादिति चेन्न तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् । न च ज्ञानं तत्र प्रत्यासत्तिः ज्ञानस्य प्रत्यासत्तित्वे ततएव वह्न्यादेः प्रत्यक्षत्वापत्तौ अनुमानाद्युच्छेदापत्तेः ।

ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ तावत् कथं रजतमुत्पद्यते इति चेत् । उच्यते । न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव तथाहि काचादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगादिदमाकारा चाक्चक्याकारा च काचिदन्तःकरणवृत्तिरुदेति । तस्याञ्च वृत्तौ इदमवच्छिन्नचैतन्यं प्रतिविम्बते तत्र पूर्व्वोक्तरीत्या वृत्तेर्निर्गमनेन इदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिका अविद्या चाक्चक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते । परिणामोनाम उपादानसमसत्ताककार्य्यापत्तिः । विवर्त्तो नाम उपादानविषमसत्ताककार्य्या-

पत्तिः । प्रातिभासिकरजतञ्चाविद्यापेक्षया परिणाम इति चैतन्यापेक्षया विवर्त्त इति चोच्यते । अविद्यापरिणामरूपञ्च तद्रजतमविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्त्तते अस्मन्मते सर्व्वस्यापि कार्य्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात् ।

ननु चैतन्यनिष्ठरजतस्य कथमिदं रजतमिति पुरोवर्त्तिना तादात्म्यम् । उच्यते । यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीर निष्ठत्वेनोपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात् तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेन इदमवच्छेदकतया रजतस्य पुरोवर्त्तिना संसर्गप्रत्यय उपपद्यते । तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्येऽध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते ।

ननु साक्षिण्यध्यस्तत्वे अहं रजतमिति तद्वानिति वा प्रत्ययः स्यादहं सुखीतिवदिति चेत् । उच्यते । नहि सुखादीनामन्तःकरणावच्छिन्नचैतन्याभिन्नाविद्याकार्य्यत्वप्रयुक्तमहं सुखीतिज्ञानं सुखादीनां घटादिवत् शुद्धचैतन्यएवाध्यासात् । किन्तु यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवानुगतं नियामकम् । तथा च इदमाकारानुभवाहितसंस्कारसहिताविद्याकार्य्यत्वात् घटादेरिदमाकारानुभवविषयत्वं अहमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वादन्तःकरणादेरहमनुभवविषयत्वम् । शरीरेन्द्रियादेरुभयविधानुभवसंस्कारसहिताविद्याकार्य्यत्वादुभयविधानुभवविषयत्वम् । तथाचोभयविधानुभवः इदं शरीरम् अहं देहः अहं मनुष्यः अहं ब्राह्मणः इदं चक्षुः अहं काणः इदं श्रोत्रम् अहं बधिर इति । प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमवच्छिन्नचैतन्यनिष्ठाविद्याकार्य्यत्वेऽपि इदं रजतमिति सत्यरजतीये इदमाकारानुभवाहितसंस्कारजन्यत्वात् इदमाकारानुभवविषयता नत्वहं रजतमित्यहमाकारानुभवविषयतेत्यनुसन्धेयम् ।

नन्वेवमपि मिथ्यारजतस्य साक्षात्कारविषयसम्बन्धितया भानसम्भवे

रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थमिति चेत् । उच्यते । स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयापरोक्षत्वरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात् । नन्विदंवृत्तेरजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवद्विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेन्न वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्वीकारात् । अतएव साक्षिज्ञानस्य सत्यासत्यविषयतयाप्रामाण्यानियमादप्रामाण्योक्तिः साम्प्रदायिकानाम् ।

ननु सिद्धान्ते देशान्तरीयरजतमप्यविद्याकार्य्यमध्यस्तञ्चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेन्न त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित् क्षणिकत्वं केषाञ्चित् स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि । यद्वा घटाद्यध्यासेऽविद्यैव दोषत्वेनापि हेतुः । शुक्तिरूप्याध्यासे तु काचादयो दोषाः । तथाचागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् । अतएव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादोषजन्यत्वात् प्रातिभासिकत्वम् ।

ननु स्वप्नस्थले पूर्व्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवादिति चेन्न रथादेः स्मृतिमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः अथ रथान् रथयोगान् पथः सृजत इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च । तस्मात् शुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत्प्रतिभासमवतिष्ठन्ते ।

ननु स्वप्ने रथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदा असन्निकृष्टतया अनिर्व्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः तथाच रथाद्यध्यासः कुत्रेति चेन्न चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात् प्रतीयमानरथादिरस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानं देशविशेषोऽपि चिदध्यस्तः प्रातिभासिको रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकं तदा सर्व्वेन्द्रियाणामुपरमात् । अहं

रथद्रत्यादिप्रतीत्याश्चादनन्तु पूर्व्वं अभिरसनीयम् । स्वप्ने रथादयः साक्षान्मायापरिणामा इति केचित् । अन्तःकरणद्वारा तत्परिणामा इत्यन्ये ।

ननु रथादेः शुद्धचैतन्याध्यस्तत्वे इदानीं तत्साक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धरथादयोऽनुवर्त्तेरन् । उच्यते । कार्य्यविनाशोहि द्विविधः । कश्चिदुपादानेन सह कश्चित्तु विद्यमानएवोपादाने । आद्यो वाधः द्वितीयस्तु निवृत्तिः अत्रयस्य कारणमधिष्ठानतत्त्वज्ञानसाक्षात्कारस्तेन विनोपादानभूताया अविद्याया अनिवृत्तेः । द्वितीयस्य कारणं विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिर्व्वा । तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपञ्चो मा वाधिष्ट मुषलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वजनकीभूतनिद्रादिदोषनाशेन वा रथादिनिवृत्तौ कोविरोधः । एवञ्च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठाविद्याकार्य्यत्वपक्षे शुक्तिरितिज्ञानेन तदज्ञानेन सह रजतस्य वाधः । मूलाविद्याकार्य्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कार निवर्त्त्यतया शुक्तितत्त्वज्ञाननिवर्त्त्यतया रजतस्य तत्र शुक्तिज्ञानान्निवृत्तिमात्रं मुषलप्रहारेण घटस्येव ।

ननु शुक्तौ रजतस्य प्रतिभाससमये सत्ताभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात् किन्तु इदानीं न रजतमिति स्यात् इदानीं घटः श्यामो नेतिवदितिचेन्न नहि तत्र रजतत्वावच्छिन्नप्रतियोगिकाभावोनिषेधविषयः किन्तु लौकिकत्वपारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिकः व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिभावाभ्युपगमात् ।

ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं न वा अनवगते प्रतियोगितावच्छेदकावच्छिन्नरजतसत्त्वज्ञानाभावादभावप्रत्ययानुपपत्तिः अवगते अपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वात् रजते पारमार्थिकत्वमप्यनिर्व्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्त्तत इति चेन्न पारमार्थिक-

स्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभासासम्भवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् । अतएव इन्द्रियसन्निकृष्टजवाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवात् न तत्र स्फटिकेऽनिर्व्वचनीयलौहित्योत्पत्तिः । नन्वेवं यत्र जवाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियेत इति चेन्न इष्टत्वात् ।

एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षमानानर्लक्षणानुगमो यथार्थप्रत्यक्षलक्षणासम्भवश्च दर्शनीयः ।

उक्तप्रत्यक्षं प्रकारान्तरेण द्विविधम् । इन्द्रियजन्यं तदजन्यञ्चेति । तत्र इन्द्रियाजन्यं सुखादिप्रत्यक्षं मनस इन्द्रियत्वनिराकरणात् । इन्द्रियाणि पञ्च घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकानि । सर्व्वाणि चेन्द्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति । तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्वस्थानस्थितान्येव गन्धरसस्पर्शोपलम्भान् जनयन्ति । चक्षुःश्रोत्रे तु स्वतएव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः श्रोत्रस्यापि चक्षुरादिवत्परिच्छिन्नतया भेर्य्यादिदेशगमनसम्भवात् अतएवानुभवो भेरीशब्दो मया श्रुत इति । वीचीतरङ्गन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनायां गौरवं भेरीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनायां गौरवञ्च स्यात् ।

तदेवं व्याख्यातं प्रत्यक्षम् ।

इति परिभाषायां प्रत्यक्षपरिच्छेदः ।

---

## द्वितीयः परिच्छेदः ।

अथानुमानं निरूप्यते ।

अनुमितिप्रमाकरणमनुमानम् । अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या । व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावान्नानुमितित्वम् । अनुमितिकरणञ्च व्याप्तिज्ञानं तत्संस्कारोऽवान्तर व्यापारः नतु तृतीयलिङ्गपरामर्शोऽनुमितिकरणं तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात् । नच संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः स्मृतिप्रा-

गभावजन्यत्वस्य संस्कारमात्रज यत्वस्य वा स्मृतित्वप्रयोजकतया संस्कार-ध्वंससाधारणसंस्कारजन्यत्वस्य तत्प्रयोजकत्वात् ।

न च यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यं व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात् नहि स्मृतेः संस्कार-नाशकत्वनियमः स्मृतिधारादर्शनात् । न चानुद्बुद्धसंस्कारादनुमित्यापत्तिस्त-दुद्बोधस्यापि सहकारित्वात् । एवञ्चायं धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवति न तु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्यधूमवानयमित्यादिविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं गौरवान्मानाभावाच्च । तच्च व्याप्तिज्ञानं वह्निविषय-कज्ञानांशएव कारणं न तु पर्व्वतविषयकत्वांशः इति पर्व्वतोवह्निमानिति ज्ञानस्य वह्न्यंशे एवानुमितित्वं न पर्व्वताद्यंशे प्रत्यक्षत्वस्योपपादितत्वात् । व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपा । सा च व्यभि-चारादर्शने सति सहचारदर्शनेन गृह्यते । तच्च सहचारदर्शनं भूयोदर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः सहचारदर्शनत्वस्यैव प्रयोजकत्वात् ।

तच्चानुमानमन्वयिरूपमेकमेव न तु केवलान्वयि सर्व्वस्यापि धर्मस्या-स्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभावाप्रतियोगि साध्यकत्व-रूपकेवलान्वयित्वस्यासिद्धेः । नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् । कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः अर्था-पत्तिप्रमाणादिति वक्ष्यामः । अतएवानुमानस्य नान्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्यानुमिति हेतुत्वात् ।

तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थन्तूक्तमेव परार्थन्तु न्यायसाध्यम् । न्यायो नामावयवसमुदायः । अवयवाश्च त्रय एव प्रतिज्ञा हेतूदाहरणरूपाः उदाहरणोपनयननिगमनरूपा वा न तु पञ्च अवयवत्र-येणैव व्याप्तिपक्षधर्म्मयोरुपदर्शनसम्भवेनाधिकावयव द्वयस्य व्यर्थत्वात् ।

एवमनुमाने निरूपिते तस्मात् ब्रह्मभिन्ननिखिलमिथ्यात्वसिद्धिः । तथाहि ब्रह्मभिन्नं सर्व्वं मिथ्या ब्रह्मभिन्नत्वात् यदेवं तदेवं यथा शुक्तिरू-

र्थम्। न च दृष्टान्तासिद्धिः तस्य साधितत्वात्। न चाप्रयोजकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात्। मिथ्यात्वञ्च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम्। अभिमतपदमसम्भववारणाय यावत्पदमर्थान्तरवारणाय। तदुक्तम्। सर्व्वेषामपि भावानां स्वाश्रयत्वेन सम्मते। प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता इति॥ यद्वा अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात् पटान्तरवत् इत्यनुमानं मिथ्यात्वे प्रमाणम्। तदुक्तम्। अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिता। अंशित्वादितरांशीव दिगेषैव गुणादिष्विति। न च घटादेर्म्मिथ्यात्वे सन् घट इति प्रत्यक्षेण बाधः अधिष्ठानब्रह्मसत्ताया स्तत्र विषयतया घटादेः सत्यत्वासिद्धेः।

न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यं नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात्। न च नीरूपस्य द्रव्यस्य चाक्षुषाद्ययोग्यत्वमिति नियमः सम्मते ब्रह्मणोद्रव्यत्वासिद्धेः; गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतं नहि निर्गुणस्य ब्रह्मणो गुणाश्रयता नापि समवायिकारणता समवायासिद्धेः। अस्तु वा द्रव्यत्वं ब्रह्मणस्तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वे नाविरोधः। यद्वा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकञ्चेति। तत्र पारमार्थिकं सत्त्वं ब्रह्मणः व्यावहारिकं सत्त्वमाकाशादेः प्रातिभासिकं सत्त्वं शुक्तिरजतादेः। तथा च घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम्। अस्मिन् पक्षे घटादेर्ब्रह्मणि निषेधो न स्वरूपेण किन्तु पारमार्थिकत्वेनेति न विरोधः। अस्मिन् पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिकत्वमत्यन्ताभावविशेषणं द्रष्टव्यम्। तस्मादुपपन्नं मिथ्यात्वानुमानमिति।

इति परिभाषायामनुमानपरिच्छेदः।

---

# तृतीयः परिच्छेदः ।

—००—

अथोपमानं निरूप्यते ।

सादृश्यप्रमाकरणमुपमानम् । तथाहि नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरयं पिण्डो गोसदृश इति तदनन्तरञ्च भवति निश्चयोऽनेन सदृशी मदीया गौरिति तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं गोनिष्ठगवयसादृश्यज्ञानं फलम् ।

नचेदं प्रत्यक्षेण सम्भवति गोपिण्डस्य तदेन्द्रियासन्निकर्षात् नाप्यनुमानेन गवयनिष्ठगोसादृश्यस्यातल्लिङ्गत्वात् । नापि मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात् यो यत्सादृश्यप्रतियोगी स तत्सदृशः यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानात् तत्सम्भव इति वाच्यम् एवंविधानुमानानवतारेऽप्यनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वादुपमिनोमीत्यनुव्यवसायाच्च । तस्मादुपमानं मानान्तरम् ।

इति परिभाषायामुपमानपरिच्छेदः ॥

---

# चतुर्थः परिच्छेदः ।

अथागमो निरूप्यते ।

यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम् । वाक्यजन्ये च ज्ञाने आकाङ्क्षायोग्यतासत्तयस्तात्पर्यज्ञानञ्चेति चत्वारि कारणानि ।

तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इति कर्त्तव्यतायाश्च जिज्ञासाविषयत्वात् । अजिज्ञासोरपि वाक्यार्थबोधात् योग्यत्वमुपात्तं तदवच्छेदकञ्च क्रियात्वकारकत्वादिकमिति नातिव्याप्तिः । अभेदान्वये

च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः । एतादृशाभिप्रायेणैव बलाबलाधिकरणे सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकाङ्क्षेत्यादिव्यवहारः । ननु तत्रापि वाजिनस्य जिज्ञासाविषयत्वेऽपि तद्योग्यत्वसमस्यैव प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतावच्छेदकत्वात् इति चेन्न स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात् । आमिक्षायान्तु नैवं वाजिनान्वयस्य तदानुपस्थानात् । उदाहरणान्तरेष्वपि दुर्बलत्वप्रयोजकाकाङ्क्षाविरह एवमेव द्रष्टव्यः ।

योग्यता च तात्पर्यविषयसंसर्गाबाधः । वह्निना सिञ्चतीत्यादौ तादृशसंसर्गबाधान्न योग्यता । स प्रजापतिरात्मनो वपामुदखिददित्यादावपि तात्पर्यविषयभूतपशुप्राशस्त्याबाधाद्योग्यता । तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावाद्योग्यता ।

आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः । मानान्तरोपस्थापितपदार्थस्यान्वयबोधाभावात् पदजन्येति । अतएवाश्रुतस्थले तत्तत्पदाध्याहारः द्वारमित्यादौ पिधेहीत्यादिः अतएवेषे त्वेत्यादौ छिनद्मीति पदाध्याहारः अतएव विकृतिषु सूर्य्याय त्वा जुष्टं निर्व्वपामीति पदप्रयोगः ।

पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति । तत्र शक्तिर्नाम पदार्थानामर्थेषु मुख्या वृत्तिः यथा घटपदस्य पृथुबुध्नोदराकृतिविशिष्टवस्तुविशेषे वृत्तिः । सा च शक्तिः पदार्थान्तरम् सिद्धान्ते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् । सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्य्यानुमेया । तादृशशक्तिविषयत्वं शक्यत्वं तच्च जातेरेव न व्यक्तेः व्यक्तीनामानन्त्येन गुरुत्वात् । कथं तर्हि गवादिपदाद्व्यक्तिभानमिति चेत् जातेर्व्यक्तिसमानसंविद्वेद्यत्वादिति ब्रूमः । यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती नतु ज्ञाता जातौ तु सा ज्ञाता हेतुः ।

न च व्यक्त्यंशे शक्तिज्ञानमपि कारणं गौरवात् जाति शक्तिज्ञाने सति व्यक्तिशक्तिज्ञानं विना व्यक्तिधीविलम्बाभावाच्च । अतएव न्यायमतेऽप्यन्वयेऽपि शक्तिः स्वरूपसतीति सिद्धान्तः ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति व्यक्तिरवाच्या । अथवा व्यक्तौ लक्षणयावगमः यथा नीलो घटइत्यत्र नीलशब्दस्य नीलगुणविशिष्टे लक्षणा तथा जातिवाचकस्य तद्विशिष्टे लक्षणा । तदुक्तम् । अनन्य लभ्यः शब्दार्थइति एवं शक्यो निरूपितः ।

अथ लक्ष्यपदार्थो निरूप्यते । तत्र लक्षणाविषयो लक्ष्यः । लक्षणा च द्विविधा केवललक्षणा लक्षितलक्षणा चेति । तत्र शक्य साक्षात्सम्बन्धः केवललक्षणा यथा गङ्गायां घोष इत्यत्र प्रवाहसाक्षात् सम्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा । यत्र शक्यपरम्परा सम्बन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा यथा द्विरेफपदस्य रेफ द्वययुक्तभ्रमरपद्घटितपरम्परासम्बन्धेन मधुकरेषु वृत्तिः । गौण्यपि लक्षितलक्षणैव यथा सिंहोमानवकइत्यत्र सिंहशब्दवाच्यसम्बन्धि शौर्य्यादिसम्बन्धेन मानवस्य प्रतीतिः ।

प्रकारान्तरेण लक्षणा त्रिधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति तत्र शक्यार्थमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा यथा विषं भुंक्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते । यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिः तत्राजहल्लक्षणा यथा शुक्लो घटइति अत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्त्तते । यत्र हि विशिष्टवाचकः शब्दः एकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणा यथा सोऽयं देवदत्तइति अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वं यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यसर्व्वज्ञत्वादि विशिष्टस्य त्वं पदवाच्येनान्तःकरणविशिष्टेनैक्यायोगात् ऐक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः । वयन्तु ब्रूमः सोऽयं देवदत्तः तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेऽपि न लक्षणा

शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तावपि विशेष्ययोः शक्त्युपस्थितयोरेवान्वयबोधाविरोधात् यथा घटो नित्य इत्यत्र घटपदवाच्यैक देशघटत्वस्यायोग्यत्वेऽपि घटव्यक्त्या सह नित्यत्वान्वयः। यत्र पदार्थैकदेशस्य विशेषणतयैवोपस्थितिस्तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाभ्युपगमः यथा नित्यो घटइत्यत्र घटपदाद्घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थितत्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा एवमेव तत्त्वमस्यादिवाक्येऽपि न लक्षणा शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्त्वं पदार्थयोरभेदान्वये बाधकाभावात्। अन्यथा गेहे घटः घटे रूपं घटमानय इत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणा च स्यात्। तस्मात्तत्त्वमस्यादिवाक्येषु आचार्य्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या। जहदजहल्लक्षणोदाहरणन्तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव। तत्र शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेण काके काकशब्दप्रवृत्तिः।

लक्षणावीजन्तु तात्पर्य्यानुपपत्तिरेव नत्वन्वयानुपपत्तिः काकेभ्योदधि रक्ष्यतामित्यत्रान्वयानुपपत्त्यभावात् गङ्गायां घोष इत्यादौ तात्पर्य्यानुपपत्तेरपि भावात्।

लक्षणा न पदमात्रवृत्तिः किन्तु वाक्यवृत्तिरपि यथा गभीरायां नद्यां घोष इत्यत्र गभीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा। ननु वाक्यस्याशक्ततया कथं शक्यसम्बन्धरूपा लक्षणा। उच्यते। शक्त्या यत्पदसम्बन्धेन ज्ञाप्यते तत्सम्बन्धोलक्षणा शक्तिज्ञाप्यश्च यथा पदार्थस्तथा वाक्यार्थोऽपि न काचिदनुपपत्तिः।

एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा सोऽरोदीदित्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात् एकञ्च विध्यपेक्षितप्राशस्त्य रूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिपदेनैक-

वाक्यं भवतीत्यर्थवादवाक्यानां पदैकवाक्यता। क तर्हि वाक्यैकवाक्यता यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वं यथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिवाक्यानां समिधो यजतीत्यादिवाक्यानाञ्च परस्पराङ्गाङ्गिभावबोधकतयैकवाक्यता। तदुक्तम् भट्टपादैः। स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायतइति।

एवं द्विविधोऽपि पदार्थो निरूपितः तदुपस्थितिश्चासत्तिः सा च शाब्दबोधे हेतुः तथैवान्वयव्यतिरेकदर्शनात् एवं महावाक्यार्थबोधेऽवान्तरवाक्यार्थबोधो हेतुः तथैवान्वयाद्यवधारणात्।

क्रमप्राप्तं तात्पर्यं निरूप्यते। तत्र तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यं अर्थज्ञानशून्येन पुरुषेणोच्चरिताद्वेदादर्थप्रत्ययाभावप्रसङ्गात् अयमध्यापकोऽव्युत्पन्नइतिविशेषदर्शनेन तात्पर्यभ्रमस्याप्यभावात्। नचेश्वरीयतात्पर्यज्ञानात्तत्र शाब्दबोधइति वाच्यं ईश्वरानङ्गीकर्तुरपि तद्वाक्यादर्थप्रतिपत्तिदर्शनात्।

उच्यते। तत्प्रतीतिजननयोग्यत्वं तात्पर्यं गेहे घटइति वाक्यं गेहघटसंसर्गप्रतीतिजननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्यमिति तद्वाक्यं घटसंसर्गपरं न तु पटसंसर्गपरमित्युच्यते।

ननु सैन्धवमानयेत्यादिवाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदाप्यश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वाल्लवणपरत्वज्ञानदशायामप्यश्वादिसंसर्गज्ञानापत्तिरिति चेन्न तदितरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्यविशेषणत्वात् तथाच यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति तदन्यप्रतीतीच्छया नोच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते। शुकादिवाक्येऽव्युत्पन्नोच्चरितवेदवाक्यादौ च प्रतीतीच्छाया एवाभावात् तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षणसत्त्वान्नाव्याप्तिः। नचोभयप्रतीतीच्छयोच्चरितेऽव्याप्तिः तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वस्य विवक्षितत्वात् उक्तप्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिकाशक्तिः अस्माकं मते सर्वत्र कारणतायां शक्तेरेवावच्छेदकत्वादिति न कोपि दोषः।

एवं तात्पर्य्यस्य प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे चतुर्थवर्णिके तात्पर्य्यस्य ज्ञानहेतुत्वनिराकरणवाक्यं तत्प्रतीतोच्चयोच्चरितत्वरूपतात्पर्य्यनिराकरणपरम् अन्यथा तात्पर्य्यनिश्चयफलकवेदान्त विचारवैयर्थ्यप्रसङ्गात् ।

केचित्तु शाब्दज्ञानत्वावच्छेदेन तत्तत्तात्पर्यज्ञानं हेतुरित्येवं परं चतुर्थवर्णिकाक्यं तात्पर्य्यसंशयविपर्य्ययोत्तरशाब्दज्ञानविशेषे च तात्पर्य्यज्ञानं हेतुरेव इदं वाक्यं एतत्परं उतान्यपरमिति संशये तद्विपर्य्यये च तदुत्तरवाक्यार्थविशेषनिश्चयस्य तात्पर्य्यनिश्चयं विनानुपपत्तेरित्याहुः ।

तच्च तात्पर्यं वेदे मीमांसापरिशोधितन्याय्यादेवावधार्य्यते लोके तु प्रकरणादिना । तत्र लौकिकवाक्यानां मानान्तरावगतार्थ तयानुवादकत्वं वेदे तु वाक्यार्थस्यापूर्व्वतया नानुवादकत्वं तत्र लोके वेदे च कार्य्यपराणामिव सिद्धार्थानामपि प्रामाण्यं पुत्रस्ते जातइत्यादिषु सिद्धपदार्थेऽपि पदानां सामर्थ्यावधारणात् । अतएव वेदान्त वाक्यानां ब्रह्मणि प्रामाण्यं । यथा चैतत्तथा विषयपरिच्छेदे वक्ष्यते ।

तत्र वेदानां नित्यसर्व्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति नैयायिकाः । वेदानां नित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमिति अध्वरमीमांसकाः । अस्माकं मते वेदोऽनित्य उत्पत्तिमत्त्वात् उत्पत्तिमत्त्वञ्च अस्य महतोभूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्ववेद इत्यादिश्रुतेः । नापि वेदानां क्षणावस्थायित्वं य एव वेदोदेवदत्तेनाधीतः स एव मयापीत्यादिप्रत्यभिज्ञाविरोधात् । अतएव गकारादिवर्णानामपि न क्षणिकत्वं सोऽयं गकार इत्यादिप्रत्यभिज्ञाविरोधात् । तथाच वर्णपदवाक्यतत्समुदायरूपस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीनध्वंसप्रतियोगित्वञ्च न तु मध्ये वर्णानामुत्पत्तिविनाशौ अनन्तगकारादिकल्पनायां गौरवतात् । अनुच्चारणदशायां वर्णानामनभिव्यक्तिस्तदुच्चारण रूपव्यञ्जकाभावात् न विरुद्ध्यते अन्धकारस्थघटानुपलब्धिवत् । उत्पन्नो गकार इत्यादिप्रतीतिस्तु सएवायं गकारइत्यादिप्रत्यभिज्ञाविरोधादप्रमाणं

वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिनिरूपितपरम्परासम्बन्धविषयत्वेन प्रमाणं वा । तस्मान्न वेदानां क्षणिकत्वम् ।

ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवदुत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेन्न न तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वं गुरुमतेऽपि पौरुषेयत्वापत्तेः; नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वं नैयायिकाभिमतं पौरुषेयत्वानुमानेऽस्मदादिना सिद्धसाधनापत्तेः । किन्तु स्वजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् तथाच सर्गाद्यकाले परमेश्वरः पूर्व्वसर्गसिद्धवेदानुपूर्व्वीकवेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदस्य । भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम् । एवं पौरुषेयापौरुषेयभेदेन द्विविध आगमो निरूपितः ।

इति परिभाषायामागमपरिच्छेदः ।

---

## पञ्चमः परिच्छेदः ।

इदानीमर्थापत्तिर्निरूप्यते ।

तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञानं करणं उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यं यस्याभावे यस्यानुपपत्तिः तत्तत्रोपपादकं यथा रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशं पीनत्वमुपपाद्यं यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकं रात्रिभोजनकल्पनारूपायां प्रमितौ अर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्त्तते कल्पनाकरणे पीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्त्तते इति फलकरणयोरुभयोस्तत्र योगः ।

सा चार्थापत्तिर्द्विधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। दृष्टार्थापत्तिर्यथा इदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयति। श्रुतार्थापत्तिर्यथा यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनं यथा तरति शोकमात्मविदित्यत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्त्यत्वानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते। यथा वा जीवी देवदत्तो गृहे नेति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं बहिः सत्त्वं कल्पयति।

श्रुतार्थापत्तिश्च द्विविधा अभिधानानुपपत्तिः अभिहितानुपपत्तिश्च। यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्यान्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः यथा द्वारमित्यत्र पिधेहीति पदाध्याहारः यथा वा विश्वजिता यजेतेत्यत्र स्वर्गकामपदाध्याहारः। ननु द्वारमित्यादावन्वयाभिधानात् पूर्व्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विनानुपपन्नमिति कथं ज्ञातमिति चेन्न अभिधानपदेन करणव्युत्पत्त्या तात्पर्य्यस्य विवक्षितत्वात् तथा च द्वारकर्म्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विनानुपपन्नमिति ज्ञानं तत्रापि सम्भाव्यते।

अभिहितानुपपत्तिस्तु यत्र वाक्यावगतार्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र स्वर्गसाधनत्वस्य क्षणिकयागगतस्यानुपपत्त्या मध्यवर्त्त्यपूर्व्वं कल्प्यन्ते।

न चेयमर्थापत्तिरनुमानेऽन्तर्भवितुमर्हति अन्वयव्याप्त्यज्ञानेनान्वयिन्यन्तर्भावात्। व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तम्। अतएवार्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः किन्त्वनेनेदं कल्पयामीति। नन्वर्थापत्तिस्थले इदमनेन विनानुपपन्नमिति ज्ञानं करणमित्युक्तं तत्र किमिदं तेन विनानुपपन्नं तदभावव्यापकाभावप्रतियोगित्वमिति ब्रूमः। एवमर्थापत्तेर्मानान्तरत्वसिद्धौ व्यतिरेकिनानुमानान्तरं पृथिवीतरेभ्यो भि-

द्यते इत्यादौ गन्धवत्त्वमितरभेदं विनानुपपन्नमित्यादिज्ञानस्य करणत्वात् अतएवानुव्यवसायः पृथिवीमितरभेदं कल्पयामीति ।

इति परिभाषायामर्थापत्तिपरिच्छेदः ।

---

## षष्ठः परिच्छेदः

इदानीं षष्ठं प्रमाणं निरूप्यते ।

ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् । अनुमानादिजन्यातीन्द्रियाभावानुभवहेतावनुमानादावतिव्याप्तिवारणायाजन्यान्तम् । अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणायासाधारणेति अभावस्मृतिसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणायानुभवेति विशेषणम् । नचाभावानुमितिस्थलेऽप्यनुपलब्धेरेव भावोग्रहणतां विशेषाभावादिति वाच्यं धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् ।

ननु केयं योग्यानुपलब्धिः किं योग्यस्य प्रतियोगिनोऽनुपलब्धिः उत योग्येऽधिकरणे प्रतियोगिनोऽनुपलब्धिः । नाद्यः स्तम्भे पिशाचभेदस्याप्रत्यक्षत्वापत्तेः । नान्त्यः आत्मनि धर्माद्यभावस्यापि प्रत्यक्षत्वापत्तेरिति चेन्न योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रयणात् अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वं यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वं तदनुपलब्धेर्योग्यत्वमित्यर्थः । तथाहि स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलम्भः स्यादित्यापादनसम्भवात् तादृशभूतले घटाभावोऽनुपलब्धिगम्यः । अन्धकारे तु तादृशापादनाभावान्नानुपलब्धिगम्यता । अतएव स्तम्भे पिशाचसत्त्वे स्तम्भवत् प्रत्यक्षत्वापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्माधर्मादिसत्त्वेऽप्यस्यातीन्द्रियतया निरुक्तोपलम्भापादनासम्भवान्न धर्माद्यभावस्यानुपलब्धिगम्यत्वम् ।

अनुक्तरीत्याधिकरणेन्द्रियसन्निकर्षस्थलेऽभावस्यानुपलब्ध्यत्वम् अन-भिमतं तत्रक्लृप्तेन्द्रियमेवाभावाकारवृत्तावपि करणं इन्द्रियान्वय-व्यतिरेकानुविधानादिति चेन्न प्रतियोग्यनुपलब्धेरप्यभावग्रहहेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात्। इन्द्रियस्य चाभावेन सम सन्निकर्षाभावेनाभावग्रहाहेतुत्वात् इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञा-नाद्युपक्षीणत्वेन न्यथासिद्धेः।

ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभय सिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यगत् तन्निष्ठघटाभावावच्छिन्नस्यापि प्रमातृभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्तेऽपीति चेत् सत्यं अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्या-नुपलब्धेर्मानान्तरत्वात्। नहि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्कर-णस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति। दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युप-गमात्। फलवैजात्यं विना कथं प्रमाणवैजात्यमिति चेन्न वृत्ति-वैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तथाच घटाभावाकारवृत्ति-र्नेन्द्रियजन्या इन्द्रियस्य विषयेणासन्निकर्षात् किन्तु घटानुपलब्धिरूप-प्रमाणान्तरजन्येति भवत्यनुपलब्धेर्मानान्तरत्वम्।

ननु अनुपलब्धिरूपमानान्तरपक्षेऽप्यभावप्रतीतेः प्रत्यक्षत्वे घट-वति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावो ऽभ्युपगम्येत। नचेष्टापत्तिः तस्य मायोपादानकत्वेऽभावत्वानुपपत्तेः। मायोपादानकत्वाभावे मायायाः सकलकार्य्योपादानत्वानुपपत्तिरिति चेन्न घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यते इति अन्य-थाख्यातिरेव। आरोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातिरेव व्यवस्थाप-नात्। अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्य निर्वच-नीयत्वं तथापि तदुपादानं मायैव नह्युपादानोपादेययोरत्यन्त साजात्यं तन्तुपटयोरपि तन्तुत्वपटत्वादिना वैजात्यात् यत्किञ्चित्साजात्यस्य मा-

याया अनिर्व्वचनीयघटाभावस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात् । अन्यथा व्यावहारिकं घटाभावं प्रति कथं मायोपादानमिति कुतोनाशङ्क्यः । न च विजातीययोरप्युपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यं प्रपञ्चभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात् परिणामित्वरूपस्योपादानत्वस्य निरवयवब्रह्मण्यनुपपत्तेः । तथा च प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्त इत्यलमतिप्रपञ्चेन ।

स चाभावश्चतुर्विधः प्रागभावः प्रध्वंसोऽत्यन्ताभावोऽन्योन्याभावश्चेति । मृत्पिण्डादौ कारणे कार्यस्य घटादेरुत्पत्तेः पूर्व्वं योऽभावः स प्रागभावः स च भविष्यतीतिप्रतीतिविषयः ।

तत्रैव घटस्य मुद्गरप्रहारानन्तरं योऽभावः स प्रध्वंसः ध्वंसस्यापि स्वाधिकरणकपालनाशे नाश एव । न च घटोन्मज्जनापत्तिः ध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात् अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः । नचैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति वाच्यं तादृशमधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धं ब्रह्मव्यतिरिक्तस्य सर्व्वस्य ब्रह्मज्ञान निवर्त्यतायाः वक्ष्यमाणत्वात् । यदि च ध्वंसाधिकरणं चैतन्यं तदा सिद्धिरारोपित प्रतियोगिकध्वंसस्याधिष्ठाने प्रतीयमानस्याधिष्ठान मात्रत्वात् । तदुक्तम् । अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इति । एवं शुक्तिरूप्यविनाशोऽपि इदमवच्छिन्नचैतन्यमेव ।

यत्राधिकरणे यस्य कालत्रयेऽप्यभावः सोऽत्यन्ताभावः । यथा वायौ रूपात्यन्ताभावः सोऽपि वियदादिवद्ध्वंसप्रतियोग्येव ।

इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः । अयमेव विभागो भेदः पृथक्त्वं चेति व्यवह्रियते भेदातिरिक्तपृथक्त्वादौ प्रमाणाभावात् । अयं चान्योन्याभावोऽधिकरणस्य सादित्वे सादिः । यथा घटे पटभेदः । अधिकरणस्यानादित्वे अनादिरेव । यथा जीवे ब्रह्मभेदः ब्रह्मणि वा जीव भेदः । द्विविधोऽपि भेदो ध्वंसप्रतियोग्येव अविद्यानिवृत्तौ तत्परतन्त्राणां निवृत्त्यवश्यम्भावात् ।

पुनरपि भेदो द्विविधः सोपाधिको निरुपाधिकश्चेति । तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वं तत्शून्यत्वं निरुपाधिकत्वम् । तत्राद्यो यथा एकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदः । यथा वा एकस्य सूर्यस्य जलभाजनभेदेन भेदः । तथा चैकस्यैव ब्रह्मणोऽन्तःकरणभेदाद्भेदः । निरुपाधिकभेदो यथा घटे पटभेदः । न च ब्रह्मण्यपि प्रपञ्चभेदाभ्युपगमेऽद्वैतविरोधः तात्त्विकभेदानभ्युपगमेन वियदादिवदद्वैताव्याघातात् । तदुक्तम् सुरेश्वराचार्य्यैः । अत्मा भवतः कोयं साधकत्वप्रकल्पने । किं न पश्यसि संसारं तत्रैवाज्ञान कल्पितमिति । अतएव विवरणेऽविद्यानुमाने प्रागभावव्यतिरिक्तत्व विशेषणं तत्त्वप्रदीपिकायामविद्यालक्षणे भावत्वविशेषणं सङ्गच्छते । एवं चतुर्विधानामभावानां योग्यानुपलब्ध्या प्रतीतिस्तेनानुपलब्धिर्मानान्तरम् ।

एवमुक्तानां प्रमाणानां प्रामाण्यं स्वतएव उत्पद्यते ज्ञायते च तथाहि स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं नत्वधिकं गुणमपेक्षते प्रमामात्रेऽनुगतगुणाभावात् । नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च । अतएव न सल्लिङ्गपरामर्शादिकमपि अनुमित्यादिप्रमायां गुणः असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेनानुमित्यादेः प्रमात्वात् ।

नचैवमप्रमापि प्रमा स्यात् ज्ञानसामान्यसामग्र्यविशेषादिति वाच्यं दोषाभावस्यापि हेतुत्वाङ्गीकारात् । नचैवं परतस्त्वं आगन्तुकभावकारणापेक्षायामेव परतस्त्वात् ज्ञायते च प्रामाण्यं स्वतः स्वतोग्राह्यत्वञ्च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते । नचैवं प्रामाण्यसंशयानुपपत्तिः तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् । यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वं संशयस्थले

प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहात् न संशयानुपपत्तिः । अप्रामाण्यन्तु न ज्ञानसामान्यसामग्रीप्रयोज्यं प्रमायामप्यप्रामाण्यापत्तेः किन्तु दोषप्रयोज्यं नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यम् अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् किन्तु विसम्वादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते चेति ।

इति परिभाषायामनुपलब्धिपरिच्छेदः ।

---

## सप्तमः परिच्छेदः ।

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधम् व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वञ्चेति । तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्व्वप्रमाणानामाद्यं प्रामाण्यं तद्विषयाणां व्यवहारदशायां बाधाभावात् । द्वितीयन्तु जीवब्रह्मैक्यपराणां सदेव सोम्येदमग्रआसीदित्येवमादीनां तत्त्वमसीत्यन्तानां तद्विषयस्य जीवब्रह्मैक्यस्य कालत्रयाबाध्यत्वात् । तच्चैक्यं तत्त्वंपदार्थज्ञानाधीनज्ञानमिति प्रथमं तत्पदार्थो लक्षणप्रमाणाभ्यां निरूप्यते ।

तत्र लक्षणं द्विविधम् स्वरूपलक्षणं तटस्थलक्षणञ्चेति । तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम् यथा सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यत्वादिकं स्वरूपलक्षणम् । ननु स्वस्य स्ववृत्तित्वाभावे कथं लक्षणमिति चेन्न स्वस्यैव स्वापेक्षया धर्म्मिधर्म्मभावकल्पनया लक्षणत्वसम्भवात् । तदुक्तम् । आनन्दोविषयानुभवोनित्यत्वञ्चेति सन्ति धर्म्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त इति ।

तटस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्त्तकं तदेव यथा गन्धवत्त्वं पृथिवीलक्षणम् । महाप्रलये परमाणुषु उत्पत्ति

काले घटादिषु च गन्धाभावात् । प्रकृते च जगज्जन्मादिकारणत्वम् । अत्र जगत्पदेन कार्य्यजातं विवक्षितम् । कारणत्वञ्च कर्त्तृत्वं अतोऽविद्यादौ नातिव्याप्तिः । कर्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञान चिकीर्षाकृतिमत्त्वम् । ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञान सद्भावे च यः सर्व्वज्ञः सर्व्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते इत्यादिश्रुतिर्म्मानम् । तादृशचिकीर्षासद्भावे च सोऽकामयत बहुस्यां प्रजायेयेतिश्रुतिर्म्मानम् । तादृशकृतौ च तन्मनोऽकुरुतेत्यादिवाक्यम् । ज्ञानेच्छाकृतीनामन्यतमगर्भं लक्षणत्रितयं विवक्षितं अन्यथा व्यर्थविशेषणापत्तेः । अतएव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः । एवञ्च लक्षणानि नव सम्पद्यन्ते । ब्रह्मणोजगज्जन्मादिकारणत्वे च यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्यादिश्रुतिर्म्मानम् ।

यद्वा निखिलजगदुपादानत्वं ब्रह्मणोलक्षणम् । उपादानत्वञ्च जगदध्यासाधिष्ठानत्वं जगदाकारेण परिणम्यमानमायाधिष्ठानत्वं वा । एतादृशमेवोपादानत्वमभिप्रेत्य इदं सर्व्वं यदयमात्मा सच्चात्यच्चाभवत् बहु स्यां प्रजायेयेत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः । घटः सन् घटोभाति घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् ।

नन्वानन्दात्मकचिदध्यासात् घटादेरिष्टत्वव्यवहारे दुःखस्यापि तत्राध्यासात् तत्रापीष्टत्वव्यवहारापत्तिरिति चेन्न आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्यासेऽप्यानन्दाध्यासाभावात् । जगति नामरूपांशद्वय व्यवहारस्तु अविद्यापरिणामात्मकनामरूपसम्बन्धात् । तदुक्तम् । अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमिति ।

अथ जगतोजन्मक्रमो निरूप्यते ।

तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणि कर्म्मसहकृतापरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन्नाम-रूपात्मकं निखिलप्रपञ्चं प्रथमं बुद्धावाकलय्य इदं करिष्यामीति सङ्कल्पयति तदैक्षत बहु स्यां प्रजायेयेति श्रुतेः। तत आत्मन आकाशादीनि पञ्च भूतानि अपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यानि उत्पद्यन्ते। तत्राकाशस्य शब्दोगुणोवायोस्तु शब्दस्पर्शौ तेजसस्तु शब्द स्पर्शरूपाणि अपान्तु शब्दस्पर्शरूपरसाः पृथिव्यास्तु शब्दस्पर्शरूप-रस गन्धाः। ननु शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात्। नासौ भ्रमः बाधकाभावात्।

इमानि भूतानि त्रिगुणमायाकार्य्याणि अतस्त्रिगुणात्मकानि। एतैश्च सत्वगुणोपेतैः पञ्चभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्चेन्द्रियाणि मनोबुद्ध्यहङ्कारचित्तानि च जायन्ते। श्रोत्रादीनां पञ्चानां क्रमेण दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः मनआदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युताः अधिष्ठातृदेवताः। एतैरेव रजो-गुणोपेतैः पञ्चभूतैर्यथाक्रमेण वाक्पाणिपादपायूपस्थाख्यानि कर्म्मेन्द्रि-याणि जायन्ते। तेषाञ्च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधि-ष्ठातृदेवताः। रजोगुणोपेतैः पञ्चभूतैरेव पञ्च वायवः प्राणापान व्यानोदानसमानाख्याजायन्ते। तत्र प्रागगमनवान् वायुः प्राणोनासाग्र-स्थानवर्त्ती। अवागगमनवानपानः पाय्वादिस्थानवर्त्ती। विष्वगमन-वान् व्यानः अखिलशरीरवर्त्ती। ऊर्द्ध्वगमनवानुदानः कण्ठस्थान वर्त्ती। अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्त्ती। तैरेव तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते तासां त्रिवृत त्रिवृतमेकैकं करवाणीति त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणार्थ-त्वात्।

पञ्चीकरणप्रकारस्त्वेत्थम्। आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्भूतेषु संयोजनम्। एवं वायुं द्वेधा विभज्य तयोरेकं भागं तद्भिन्नेषु

विभज्य तेषां चतुर्णां आकाशादिषु संयोजनम् । एवं तेजोऽप्पृथिव्यंशानामपि । तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकं अर्द्धान्तरञ्च चतुर्विधभूतमयमिति पृथिव्यादौ स्वांशाधिक्यात् पृथिव्यादि व्यवहारः ॥ तदुक्तम् । वैशेष्यात्तद्वादस्तद्वाद इति ॥

पूर्व्वोक्तैरपञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्व्वाहकं मोक्षपर्य्यन्तस्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चककर्मेन्द्रिय पञ्चकप्राणादिपञ्चकसंयुक्तं जायते । तदुक्तम् । पञ्चप्राणमनोबुद्धि दशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति । तच्च द्विविधं परमपरञ्च । परं हिरण्यगर्भलिङ्गशरीरम् । अपरमस्मदादिलिङ्गशरीरम् । तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम् अस्मदादिलिङ्गशरीरञ्चाहङ्कारतत्त्वमित्याख्यायते ।

एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्यो भूम्यन्तरिक्षस्वर्गमहर्ज्जनस्तपःसत्यात्मकस्योर्द्ध्वलोकसप्तकस्य अतलपातालवितलसुतलतलातल रसातलमहातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डज स्वेदजोद्भिज्जाख्यचतुर्व्विधस्थूलशरीराणाञ्चोत्पत्तिः । तत्र जरायुजानि जरायुभ्योजातानि मनुष्यपश्वादिशरीराणि । अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादिशरीराणि स्वेदजानि स्वेदाज्जातानि यूक मशकादिशरीराणि । उद्भिज्जानि भूमिमुद्भिद्य जातानि वृक्षादि शरीराणि । वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरत्वम् ।

तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात्कर्त्तृत्वम् इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भद्वारा हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीतिश्रुतेः । हिरण्यगर्भोनाम मूर्त्तिस्तयादन्यः प्रथमोजीवः स वै शरीरी प्रथमः स वै पुरुषउच्यते । आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥ हिरण्यगर्भः समवर्त्तताग्रे इत्यादि श्रुतेः ।

एवं भूतभौतिकसृष्टिर्निरूपिता ।

इदानीं प्रलयो निरूप्यते ।

प्रलयो नाम त्रैलोक्यविनाशः । स च चतुर्व्विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति । तत्र नित्यप्रलयः सुषुप्तिः तस्याः सकलकार्य्यप्रलयरूपत्वात् धर्म्माधर्म्मपूर्व्वसंस्काराणाञ्च तदा कारणात्मनावस्थानं तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः नवा स्मरणानुपपत्तिः । न च सुषुप्तावन्तःकरणस्यापि विनाशे तदधीनप्राणनादिक्रियानुपपत्तिः वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुप्तशरीरोपलम्भवत् । नचैवं सुषुप्तस्य परेतादविशेषः सुषुप्तस्य हि लिङ्गशरीरं संस्कारात्मना तत्रैव वर्त्तते परेतस्य तु लोकान्तरे इति वैलक्षण्यात् । यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः नतु क्रियाशक्तिविशिष्टस्येति प्राणनाद्यवस्थानमविरुद्धम् । यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राणएवैकधा भवति अथैनं वाक् सर्व्वैर्नामभिः सहाप्येति सता सौम्य तदा सम्पन्नोभवति स्वमपीतोभवतीत्यादिश्रुतिरुक्तसुषुप्तौ मानम् ।

प्राकृतप्रलयस्तु कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यविनाशः । यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्म्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यं ब्रह्मणा सह ते सर्व्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमितिश्रुतेः । एवं स्वलोकवासिभिः सह कार्य्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्व्वर्त्तिनिखिललोकतदन्तर्व्वर्त्तिस्थावरादीनां भौतिकानां भूतानाञ्च प्रकृतौ मायायां लयः न तु ब्रह्मणि वाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वादतः प्राकृत इत्युच्यते ।

नैमित्तिकप्रलयस्तु कार्य्यब्रह्मणोदिवसावसाननिमित्तकः त्रैलोक्य

मात्रप्रलयो नैमित्तिकप्रलयः। ब्रह्मदिवसश्चतुर्युगसहस्रपरिमित कालः चतुर्युगसहस्राणि ब्रह्मणोदिनमुच्यते इत्यादिवचनात्। प्रलय कालोऽपि दिवसकालपरिमितः रात्रिकालस्य दिवसकालतुल्यत्वात्। प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि द्वि परार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः। तदाप्रकृतयः सप्त कल्पन्ते प्रलयाय हि। एष प्राकृतिको राजन् प्रलयो यत्र लीयते इति वचनं प्राकृतप्रलये मानम्। एष नैमित्तिकः प्रोक्तः प्रलयोयत्र विश्वसृक्। शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूरिति वचनं नैमित्तिक प्रलये मानम्।

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्व्वमोक्षःसचैक जीववादे युगपदेव नानाजीववादे तु क्रमेण सर्व्वएकीभवन्ति इत्यादि स्मृतेः। तत्रद्यास्त्रयोऽपि लयाः कर्म्मोपरमनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तोलयोऽज्ञानेन सहैवेति विशेषः।

एवं चतुर्विधः प्रलयोनिरूपितः तस्येदानीं क्रमोनिरूप्यते। भूतानां भौतिकानाञ्च न कारणलयक्रमेण लयः कारणलयसमये कार्य्याणामाश्रयमन्तरेणावस्थानानुपपत्तेः किन्तु सृष्टिक्रमविपरीत क्रमेण तत्तत्कार्य्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतया उपादाननाशस्याप्रयोजकत्वात् अन्यथा न्यायमतेऽपि महाप्रलये पृथिवी परमाणुगतरूपरसादेरविनाशापत्तेः। तथाच पृथिव्या अप्सु अपां तेजसि तेजसोवायौ वायोराकाशे आकाशस्य जीवाहङ्कारे तस्य हिरण्यगर्भाहङ्कारे तस्य चाविद्यायामित्येवंरूपएव प्रलयः। तदुक्तम् विष्णुपुराणे। जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। तेजस्यापः प्रलीयन्ते तेजोवायौ प्रलीयते। वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते॥ पुरुषान्न परं किञ्चित्सा काष्ठा परामगतिः। इत्येवंविधप्रलय कारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थलक्षणम्।

ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म स्यात् अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तिरिति चेन्न नहि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यं किन्तु अद्वये ब्रह्मण्येव तत्प्रतिपत्तौ कथं

सृष्टेरुपयोगः । इत्थं यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्यते तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशङ्कायां न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात् । ततः सृष्टिवाक्यात् ब्रह्मोपादेयत्वज्ञाने सति उपादानं विना कार्य्यस्यान्यत्र सद्भावशङ्कायां निरस्तायां नेति नेतीत्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादनेन प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिल-द्वैतविभ्रममखण्डं सच्चिदानन्दैकरसं ब्रह्मसिध्यतीति परम्परया सृष्टि-वाक्यानामप्यद्वितीये ब्रह्मण्येव तात्पर्य्यम् ।

उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानान्तु उपासनाविध्यपेक्षितगुणारो-पमात्रपरत्वं न सगुणपरत्वं निर्गुणप्रकरणपठितानां सगुण वाक्यानान्तु निषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वेन विनियोग इति न किञ्चिदपि वाक्य मद्वितीयब्रह्मप्रतिपादनेन विरुध्यते ।

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्वरचैतन्यं मायां प्रतिबिम्बरूपमिति केचित् । तेषामयमाशयः । जीवपरमेश्वर साधारण-चैतन्यमात्रं बिम्बं तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वर-चैतन्यं अन्तःकरणेषु प्रतिबिम्बः जीवचैतन्यं कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतेः । एतन्मते जलाशयगतशरावजलगत-सूर्य्यप्रतिबिम्बयोरिव जीवपरमेश्वरयोर्भेदः । अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वं अन्तःकरणस्य परिच्छिन्नतया तदुपाधिक-जीवस्यापि परिच्छिन्नत्वम् ।

एतन्मतेऽविद्याकृतदोषाः जीवे इव परमेश्वरेऽपि स्युः उपाधेः प्र-तिबिम्बपक्षपातित्वादि स्वरसाद्बिम्बात्मकमीश्वरचैतन्यमित्यपरे । तेषामयमा-शयः । एकमेव चैतन्यं बिम्बत्वाक्रान्तमीश्वरचैतन्यं प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यम् । बिम्बप्रतिबिम्बकल्पनोपाधिश्च एकजीववादेऽविद्या अनेक जीववादेत्वन्तःकरणान्येव अविद्यान्तःकरणरूपोपाधि प्रयुक्तोजीवपरमेश्व-रयोर्भेदः । उपाधिकृतदोषाश्च प्रतिबिम्बे जीवे एव वर्त्तन्ते नतु बिम्बे

परमेश्वरे उपाधेः प्रतिविम्बपक्षपातित्वात्। एतन्मते च गगनस्थसूर्य्यस्य जलादौ भासमानप्रतिविम्बसूर्यस्येव जीव परमेश्वरयोर्भेदः।

ननु ग्रीवास्थमुखस्य दर्पणप्रदेशे इव बिम्बचैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात् तस्य सर्वान्तर्यामित्वं न स्यात् इति चेन्न साभ्र नक्षत्रस्याकाशस्य जलादौ प्रतिविम्बितत्वेऽपि बिम्बभूतमहाकाशस्यापि जलादिप्रदेशे सम्बन्धदर्शनेन परिच्छिन्नबिम्बस्य प्रतिबिम्बदेशासम्बन्धित्वेऽपि अपरिच्छिन्नब्रह्मबिम्बस्य प्रतिबिम्बदेशे सम्बन्धाविरोधात्। न च रूपहीनस्य ब्रह्मणो न प्रतिबिम्बसम्भवः रूपवत एव तथात्वदर्शनादिति वाच्यं नीरूपस्यापि रूपस्य प्रतिबिम्बदर्शनात् न च नीरूपस्य द्रव्यस्य प्रतिबिम्बाभावनियमः आत्मनोद्रव्यत्वाभावस्योक्तत्वात् एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। यथाह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा इत्यादिवाक्येन ब्रह्मप्रतिबिम्बाभावानुमानस्य बाधितत्वाच्च।

तदेवं तत्पदार्थो निरूपितः।

इदानीं त्वम्पदार्थो निरूप्यते।

एकजीववादेऽविद्याप्रतिबिम्बो जीवः अनेकजीववादे तु अन्तःकरणप्रतिबिम्बः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान्। तत्र जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः। इन्द्रियजन्यज्ञानञ्चान्तःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात्।

सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम्। तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम्। एवं सति न सर्वदा घटादेर्भानप्रसङ्गः अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात्। तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं तद्भासकस्य तदनिवर्त्तकत्वात् नापि वृत्त्युपहित

चैतन्यं परोक्षस्थलेऽपि तद्वित्त्यापत्तेरितिपरोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वा आवरणभङ्गकत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते ।

सम्बन्धार्था वृत्तिरित्यपरं मतम् । तत्राविद्योपाधिकोजीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्ष वृत्तिविरहदशायां न घटादिकमवभासयति घटादिना समं सम्बन्धा भावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात् ।

ननु अविद्योपाधिकस्य जीवस्यापरिच्छिन्नस्य स्वतएव समस्तवस्तु सम्बद्धस्य वृत्ति विरहदशायां सम्बन्धाभावाभिधानमसङ्गतं असङ्गतत्व इच्छा सम्बन्धाभावाभिधाने च वृत्त्यनन्तरमपि सम्बन्धोन स्यादिति चेत् । उच्यते न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः किन्तर्हि घटादिभानप्रयोजकं सम्बन्धविशेषम् । स च सम्बन्धविशेषो विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकता लक्षणः कादाचित्कस्तत्तदाकारवृत्तिनिबन्धनः । तथा हि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वतएव जीवचैतन्याभिव्यञ्जनसमर्थं घटादिकन्तु न तथा अस्वच्छद्रव्यत्वात् । स्वाकारवृत्तिसंयोगदशायान्तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति । तदुक्तं विवरणे अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति । दृष्टञ्चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसम्बन्धदशायां प्रतिबिम्बग्राहित्वं यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिम्ब ग्राहिता । घटादेरभिव्यञ्जकत्वञ्च तत्प्रतिबिम्बग्राहित्वं चैतन्यस्याभिव्यक्तत्वञ्च तत्र प्रतिबिम्बितम् । एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः । परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम् । एतन्मते च विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम् ।

एवं जीवस्यापरिच्छिन्नत्वेऽपि वृत्तेः सम्बन्धार्थत्वं निरूपितम् ।

इदानीं परिच्छिन्नत्वपक्षे सम्बन्धार्थत्वं प्रतिपाद्यते । तथाहि अन्तःकरणोपाधिकोजीवस्तस्य च न घटाद्युपादानता घटादिदेशासम्बन्धात्

किन्तु ब्रह्मैव घटाद्युपादानं तस्य मायोपहितस्य चैतन्यस्य सकलघटाद्यन्वयित्वात्। अतएव ब्रह्मणः सर्व्वज्ञता तथा च जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासम्भवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थं घटाद्याकारवृत्तिरिष्यते।

ननु वृत्त्यापि कथं प्रमातृचैतन्यविषयचैतन्ययोरभेदः सम्पाद्यते घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासम्भवादिति चेन्न वृत्तेर्विषयदेशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेनोपाधेयभेदाभावस्योक्तत्वात्। एवमपरोक्षस्थले वृत्तेर्मतभेदेन विनियोग उपपादितः।

इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था। जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणाय अन्तःकरणेति।

सुषुप्तिर्नाम अविद्यागोचराविद्यावृत्त्यवस्था। जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरणवृत्तित्वान्न तत्रातिव्याप्तिः। अत्र केचित् मरणमूर्च्छयोरवस्थान्तरतामाहुः। अपरे तु सुषुप्तावेव तयोरन्तर्भावमाहुः। तत्र तयोरवस्थात्रयान्तर्भावबहिर्भावयोः त्वम्पदार्थनिरूपणे उपयोगाभावान्न तत्र प्रयत्यते। तस्य च मायोपाध्यपेक्षयैकत्वं अन्तःकरणोपाध्यपेक्षया च नानात्वं व्यवह्रियते। एतेन जीवस्याणुत्वं प्रत्युक्तं बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरणपरिणामोपाधिकपरिमाणश्रवणात्। स च जीवः स्वयंप्रकाशः स्वप्नावस्थामधिकृत्यात्रायं पुरुषः स्वयंज्योतिरिति श्रुतेः। अनुभवस्वरूपश्च प्रज्ञानघन इत्यादिश्रुतेः अनुभवामीतिव्यवहारस्तु वृत्तिप्रतिबिम्बितचैतन्यमादायोपपद्यते।

एवं त्वम्पदार्थो निरूपितः।

अथ तत्त्वम्पदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते।

ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किञ्चिज्ज्ञत्वसर्व्वज्ञत्वादिविरुद्धधर्म्माश्रयत्वादिलिङ्गेन द्वा सुपर्णेत्यादिश्रुत्या द्वाविमौ पुरुषौ लोके

चरस्याचर एव च इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादिवाक्यमादित्योयूपः यजमानः प्रस्तर इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न भेदप्रत्यक्षस्य सम्भावितकरणदोषजन्यस्यासम्भावित दोषवेदजन्यज्ञानेन बाध्यमानत्वात् । अन्यथा चन्द्रगताधिकपरिमाणग्राहकज्योतिःशास्त्रस्य चन्द्रप्रदेशग्राहिप्रत्यक्षेण बाधापत्तेः पाक रक्ते घटे रक्तोऽयं न तु श्याम इति वत् सविशेषणे हीतिन्यायेन जीव परभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च । अतएव च नानुमानमपि प्रमाणं आगमबाधात् मेरुपाषाणमयत्वानुमानवत् । नाप्यागमान्तरविरोधः तत्परातत्परवाक्ययोस्तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादि द्वा सुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्य्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात् । नच जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत् स्वभावतोनिर्गुणस्यैव जीवस्यान्तःकरणाद्युपाधिवशात् कर्त्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः । यदि जलादावौष्ण्यमारोपितं तदा प्रकृतेऽपि तुल्यम् ।

न च सिद्धान्ते कर्त्तृत्वस्य क्वचिदप्यभावात् आरोप्यप्रमाहित संस्काराभावे कथमारोप इतिवाच्यं लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् । न च प्राथमिकारोपे का गतिः कर्त्तृत्वाद्यध्यास प्रवाहस्यानादित्वात् तत्र तत्त्वम्पदवाच्ययोर्भिन्नविशिष्टयोरैक्यायोगेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव अतएव तत्प्रतिपादकतत्त्वमस्यादि वाक्यानामखण्डार्थत्वं सोऽयमित्यादिवाक्यवत् । न च कार्य्यपराणामेव प्रामाण्यं चैत्र पुत्रस्ते जात इत्यादौ सिद्धेऽपि सङ्गतिग्रहात् ।

एवं सर्व्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीव परैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम् ।

इतिपरिभाषायां विषयपरिच्छेदः ।

---

इदानीं प्रयोजनं निरूप्यते ।

यदवगतं सत् स्ववृत्तितयेष्यते तत् प्रयोजनं तच्च द्विविधं मुख्यं गौणञ्चेति । तत्र सुखदुःखाभावौ मुख्ये प्रयोजने तदन्यतरसाधनं गौणं प्रयोजनम् । सुखञ्च द्विविधं सातिशयं निरतिशयञ्चेति । तत्र सातिशयं सुखं विषयानुषङ्गजनितान्तःकरणवृत्तितारतम्यकृतानन्दलेशाविर्भावविशेषः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यादिश्रुतेः । निरतिशयं सुखञ्च ब्रह्मैव आनन्दो ब्रह्मेति व्यजानादित्यादिश्रुतेः । आनन्दात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ब्रह्मविद्ब्रह्मैव भवति तरति शोकमात्मविदिश्रुतेः न तु लोकान्तरावाप्तिः तज्जन्यवैषयिकानन्दो वा मोक्षः तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ।

ननु त्वन्मतेऽप्यानन्दावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्योऽयं दोषः अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेन्न सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः । अनर्थनिवृत्तेरपि अधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव । लोकेऽपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव । यथा हस्तगत विस्मृतसुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशात् अप्राप्तमिव प्राप्नोति । यथावा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः नायं सर्प इत्याप्त वाक्यात् परिहृतस्यैव सर्पस्य परिहारः । एवं प्राप्तस्यानन्दस्य प्राप्तिः । परिहृतस्यानर्थस्य निवृत्तिर्मोक्षः प्रयोजनञ्च । स च ज्ञानैक साध्यः तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यादि श्रुतेः अज्ञाननिवृत्तेः ज्ञानैकसाध्यत्वनियमाच्च । तज्ज्ञानं ब्रह्मात्मैकत्व गोचरम् अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेत् अहं ब्रह्मास्मीत्यादिश्रुतेः तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदीयवचनाच्च ।

तज्ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्त्तकत्वानुपपत्तेः । तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित् । मनननिदिध्यासनसंस्कृतान्तःकरणादित्यपरे । तत्र पूर्व्वाचार्य्याणामयमाशयः । संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनं किन्तु प्रमेयविशेषनिबन्धनमित्युपपा-

दितम् । तथाच ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यमपि ज्ञानमपरोक्षम् । अतएव प्रतर्द्दनाधिकरणे प्रतर्द्दनं प्रतिप्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वेति इन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्स्वेत्यस्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते शास्त्रदृष्ट्या तूपदेशोवामदेववदित्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिः तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति ।

अन्येषामयमाशयः करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वं न विषयविशेषनिबन्धनं एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षाप्रत्यक्षव्यवहारदर्शनात् । तथाच संविदाक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वं ब्रह्मसाक्षात्कारेऽपि मनननिदिध्यासनसंस्कृतं मनएव करणं मनसैवानुद्रष्टव्यइतिश्रुतेः । मनोऽगम्यत्वश्रुतिश्चा संस्कृतमनोविषया । नचैवं ब्रह्मण औपनिषदत्वानुपपत्तिः अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवित्वात् वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधित्वात् । शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयकमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते । तदुक्तम् । अपि संराधने सूत्रात् शास्त्रार्थध्यानजा प्रमा । शास्त्रदृष्टिर्मता तान्तु वेत्ति वाचस्पतिः परम् इति । तच्च ज्ञानं पापक्षयात् स च कर्म्मानुष्ठानादिति परम्परया कर्मणां विनियोगः । अतएव तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेत्यादिश्रुतिः कषाये कर्मभिः पक्वे ततोज्ञानं प्रवर्त्तते इत्यादिस्मृतिश्च सङ्गच्छते ।

एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि मैत्रेयीब्राह्मणे आत्मा वा अरे द्रष्टव्यइतिदर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मन्तव्योनिदिध्यासितव्यइति श्रवणमनननिदिध्यासनानां विधानात् । श्रवणं नाम वेदान्तानामद्वैते ब्रह्मणि तात्पर्य्यावधारणानुकूला मानसी क्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसोव्यापारः । निदिध्यासनं नाम अनादिदुर्व्वास-

तया विषयेष्वाकृष्यमाणस्य मानसस्य विषयेभ्योऽपकृष्यात्मविषयकस्थै-र्यानुकूलो मानसोव्यापारः। तच्च निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्-कारणं ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिश्रुतेः। निदिध्यासने च मननं हेतुः अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयनिदिध्यासनायोगात्। मनने च श्रवणं हेतुः श्रवणाभावे तात्पर्यानिश्चयेन शब्दज्ञानायोगेन श्रुतार्थे विषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात्।

एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीतेत्येतावन्मात्रं केचिदाचार्या ऊचिरे। अपरे तु श्रवणं प्रधानं मनननिदिध्यासनयोः श्रवणपराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्व्वर्त्तकतया आरादुपकारकतयाङ्गत्वमित्याहुः। तदप्यङ्गत्वं न तार्त्तीयशेषत्वरूपं तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यभावेऽसम्भवात्। तथाहि व्रीहिभिर्यजेत दध्ना जुहोतीत्यादाविव मनननिदिध्यासनयोरङ्गत्वे काचित् तृतीया श्रुतिरस्ति नापि वर्हिर्देवसदनं दामीत्यादिमन्त्राणां वर्हिः खण्डनप्रकाशनसामर्थ्यवत् किञ्चिल्लिङ्गमस्ति नापि प्रदेशान्तर पठितस्य प्रवर्ग्यस्याग्निष्टोमे प्रवृणक्तीति वाक्यवत् श्रवणानुवादेन मनन निदिध्यासनविनियोजकं किञ्चिद्वाक्यमस्ति नापि दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यावगतफलसाधनताकदर्शपौर्णमासप्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनन निदिध्यासनयोराम्नानम्।

ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणरूपे गुणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनननिदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवाङ्गतेति चेन्न ते ध्यानयोगानुगता अपश्यन्नित्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेनावगतस्याङ्गाकाङ्क्षायां प्रयाज न्यायेन श्रवणमननयोरेवाङ्गतापत्तेः। क्रमसमाख्ये च दूरनिरस्ते। किञ्च प्रयाजादावङ्गत्वविचारः सप्रयोजनः पूर्व्वपक्षे विकृतिषु न प्रयाजाद्यनुष्ठानं सिद्धान्ते तु तत्रापि तदनुष्ठानमिति। प्रकृते तु श्रवणं न कस्यचित्

प्रकृतिः येन मननिदिध्यासनयोस्तत्राप्यनुष्ठानमङ्गत्व विचारफलं लभेत । तस्मान्न तार्त्तीयशेषत्वं मननिदिध्यासनयोः किन्तु यथा घटादिकार्य्ये मृत्पिण्डादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः तथा श्रवणमननिदिध्यासनानामपीति मन्तव्यम् । सूचितञ्चैतद्विवरणाचार्य्यैः शक्तितात्पर्य्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् मननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्य्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितकारणस्य शक्तितात्पर्य्यविशिष्टशब्दावधारणस्य व्यवहितमननिदिध्यासने तदङ्गे चाङ्गी क्रियेते इति श्रवणादिषु मुमुक्षूणामधिकारः काम्ये कर्म्मणि फलकामस्याधिकारित्वात् ।

मुमुक्षायां नित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानाञ्च विनियोगः । अन्तरिन्द्रियनिग्रहः शमः । बहिरिन्द्रियनिग्रहो दमः । विक्षेपाभाव उपरतिः । शीतोष्णादिद्वन्द्वसहनं तितिक्षा । चित्तैकाग्र्यं समाधानम् । गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा । तत्रोपरमशब्देन संन्यासोऽभिधीयते तथाच संन्यासिनामेव श्रवणादावधिकार इति केचित् अपरे तु उपरमशब्दस्य संन्यासवाचकत्वाभावाद्विक्षेपाभावमात्रस्य गृहस्थेष्वपि सम्भवात् जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्व्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः ।

सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्व्विशेषब्रह्मसाक्षात्कारहेतुः । तदुक्तम् । निर्व्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः । वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमिति । सगुणोपासकानाञ्चार्च्चिरादिमार्गेण ब्रह्मलोकगतानां तत्रैव श्रवणाद्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह मोक्षः । कर्म्मिणान्तु धूमादिमार्गेण पितृलोकं गतानामुपभोगेन कर्म्मक्षये सति पूर्व्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरान्तेषु पुनरुत्पत्तिः । तथाच श्रुतिः रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयच-

रुखाः कुपूयां योनि मापद्यन्ते इति। निषिद्धकर्म्मानुष्ठायिनां तु रौरवादिनरकविशेषेषु तत्तत्पापोपचिततीव्रदुःखमनुभूय श्वशूकरादितिर्य्यग्योनिषु स्थावरादिषु चोत्पत्तिरित्यलमतिप्रपञ्चेन। निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकान्तरगमनं न तस्य प्राणा उत्क्रामन्तीतिश्रुतेः किन्तु यावत् प्रारब्धकर्म्मक्षयं सुखदुःखे अनुभूय पश्चादपवृज्यते।

ननु क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुत्या ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुनेत्यादिस्मृत्या च ज्ञानस्य सकलकर्म्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्म्मावस्थानमनुपपन्नमिति चेन्न तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये कैवल्येनेत्यादि श्रुत्या नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीत्यादिस्मृत्या च उत्पादितकार्य्यकर्म्मव्यतिरिक्तानां सञ्चितकर्म्मणामेव ज्ञानविनाश्यत्वावगमात्। सञ्चितं द्विविधं सुकृतं दुष्कृतञ्च। तथाच श्रुतिः तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति।

ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्य्यप्रारब्धकर्म्मणोऽपि निवृत्तेः कथं ज्ञानिनां देहधारणमुपपद्यतइति चेन्न अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्त्तकतया प्रारब्धकर्म्मरूपप्रतिबन्धकदशायामज्ञाननिवृत्तेरनङ्गीकारात्।

नन्वेवमपि तत्त्वज्ञानादेकमुक्तौ सर्व्वमुक्तिः स्यात् अविद्याया एकत्वेनैतन्निवृत्तौ क्वचिदपि संसारायोगादिति चेन्न। इष्टापत्तेरित्येके। अपरे त्वेतद्दोषपरीहारायैव इन्द्रोमायाभिरितिबहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमङ्गीकर्त्तव्यमित्याहुः। अन्ये त्वेकैवाविद्या तस्या अविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना तथाच यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः तत्तन्तं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशइत्यपगमान्नैकमुक्तौ सर्व्वमुक्तिः। अतएव यावदधिकारमवस्थितिरधिकारिणामित्यधिकरणे अधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्य अधिकारापादकप्रारब्धकर्म्मसमाप्त्यनन्तरं विदेहकैवल्यमितिसिद्धान्तितम्। तदुक्तमाचार्य्यवाचस्पतिमिश्रैः उपासनादिसंसिद्धितोषितेश्वरचोदितम्। अधिकारं

समाप्यैते प्रविशन्ति परम्पदमिति । एतच्चैकमुक्तौ सर्व्वमुक्तिरिति पक्षे नो-पपद्यते । तस्मादेकाविद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थो-पपादनीया ।

तदेवं ब्रह्मज्ञानान्मोक्षस्तानर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्ति श्चेति सिद्धं प्रयोजनम् ।



इति श्रीधर्मराजाध्वरीन्द्रविरचिता

# वेदान्तपरिभाषा

समाप्ता

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागर भट्टाचार्य्येण

संस्कृत्य

८६ अनर्घराघव नाटक (मुरारि कृत) २

८७ दैवतब्राह्मण सभाष्य १

८८ षड्विंश ब्राह्मण १

८९ मीमांसा परिभाषा ॥०

९० अर्थ संग्रह (लौगाक्षी कृत) (मीमांसा) ॥०

९१ रघुवंश सटीक १॥०

९२ मेघदूत सटीक ।॥०

९३ ईश्वर निरूपणम् (तर्कवाचस्पति कृतम्) १॥०

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन(सभाष्य-सवृत्ति) २॥०

९६ सटीक वाल्मीकि रामायण (बालकाण्डस्य प्रथमावधि त्रयोदश सर्ग पर्यन्तम्) १॥०

९७ रामायणम् बालकाण्डस्य चतुर्दशावधि पञ्चविंशति पर्य्यन्तम् रामानुज कृतटीकासमेतम् १॥०

९८ मदनपाल निघण्टु (वैद्यक) १

९९ संस्कृतशिक्षामञ्जरी प्रथमभागः —

१०० संस्कृत शिक्षामञ्जरी द्वितीय भाग ।०

१०१ श्रीहर्षचरित [बाणभट्टकृत] ५

१०२ अमर कोष ॥०

१०३ साहित्यदर्पण १॥०

१०४ वेदान्तसूत्र (शारीरक भाष्य तथा गोविन्दा नन्द कृतटीका सहित) १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसार सटीक १

१०७ सटीक निदान ४

१०८ कामन्दकी नीतिसार १

१०९ मल्लिकामारुत प्रकरण २

११० अत्रि, विष्णु, हारीत, याज्ञवल्क्य, उशना अङ्गिरा यम आपस्तम्ब, संवर्त्त कात्यायन, वृहस्पति पराशर व्यास शंख लिखित, दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता ( धर्मशास्त्र ) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता (वैद्यक) सम्पूर्ण ६

११३ रसेन्द्रचिन्तामणि (वैद्यक) ४

११४ भगवद् गीता शङ्करभाष्य तथा आनन्दगिरि कृत टीका सहित ५

---

कलिकाता संस्कृत विद्यामन्दिरे — बि, ए, उपाधिधारिणः

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य

सकाशात् लभ्यानि ॥